Easy way to the
Study of Sanskrit.



# Sanskrit Self Teacher

## PART II

By

[Pandi]t Dr. S. D. SATWALEKAR

पारडी [ जि. वलसाड ]

# Forms of Pronouns

In this book how to frame the forms of noun o neuter gender ending in consonants, forms of numeral adjectives and those of the pronouns, easily has been shown. If the students study this well, they will easily learn how to frame the forms of all pronouns.

Up to now, the students have got good acquaintance with the matter of Sandhis and of nouns of masculine., feminine and neuter genders and of pronouns. Now in the next book we shall acquaint them with the compounds.

— The Author

---

First Edition 1976

Printed & Published by V. S. Satwalekar,
Bharat-Mudranalaya, Swadhyaya Mandal,
PARDI, Dist. Valsad ( Gujarat ) India

# Sanskrit Self Teacher

## PART II

## Lesson 1

Now we are going to show in this lesson the forms of neuter nouns ending in consonants.

असृज् ( Blood )

जकारान्तो नपुंसकलिंगः 'असृज्' शब्दः ।

| | | | |
|---|---|---|---|
| १ | असृक्, असृग् | असृजी | असृञ्जि |
| सं० | हे असृक्, असृग् | हे असृजी | हे असृञ्जि |
| २ | असृक्, असृग् | असृजी | असृञ्जि |
| ३ | असृजा, | असृग्भ्याम्, | असृग्भिः |
| | अस्ना | असभ्याम् | असभिः |
| ४ | असृजे, | असृग्भ्याम् | असृग्भ्यः, |
| | अस्ने | असभ्याम् | असभ्यः |
| ५ | असृजः, | असृग्भ्याम्, | असृग्भ्यः, |
| | अस्नः | असभ्याम् | असभ्यः |
| ६ | असृजः, | असृजोः, | असृजाम्, |
| | अस्नः | अस्नोः | अस्नाम् |
| ७ | असृजि, अस्नि, | असृजोः, | असृक्षु, |
| | असनि | अस्नोः | असत्सु |

\+

## Note

The meaning of noun असृक् is "blood" and the forms of this noun in various cases are peculiar. Therefore this noun is given here. The students should therefore note it carefully.

## Sentences

तस्य हास्नास्युक्षिता । ( अथर्व. ५।५।८ )

( तस्य ) his or its ( ह ) Verily ( अस्ना ) with blood you are ( उक्षिता ) sprayed or wetted with. i. e. You are wetted with his blood.

अश्वस्यास्नः संपतिता । ( अथर्व. ५।५।९ )

( अश्वस्य ) of the horse ( अस्नः ) from the blood ( संपतिता ) have fallen i. e. You have fallen from the blood of the horse.

## वाक्यानि

१ जगतां पतये नमः = Obeisance to the master of the world.

२ जगति सर्वे प्राणिनः उत्पद्यन्ते विलीयन्ते = In the world all animals are born and become extinct.

३ जगतः आदि कारणं किं अस्ति ? = What is the original cause of the universe ?

## Neuter noun ending in न्. "ब्रह्मन्"

### नकारान्तो नपुंसकलिंगो 'ब्रह्मन्' शब्दः ।

| | | | |
|---|---|---|---|
| १ | ब्रह्म | ब्रह्मणी | ब्रह्माणि |
| स० | हे ब्रह्म, हे ब्रह्मन् | हे ब्रह्मणी | हे ब्रह्माणि |
| २ | ब्रह्म | ब्रह्मणी | ब्रह्माणि |
| ३ | ब्रह्मणा | ब्रह्मभ्याम् | ब्रह्मभिः |
| ४ | ब्रह्मणे | ब्रह्मभ्याम् | ब्रह्मभ्यः |
| ५ | ब्रह्मणः | ब्रह्मभ्याम् | ब्रह्मभ्यः |
| ६ | ब्रह्मणः | ब्रह्मणोः | ब्रह्मणाम् |
| ७ | ब्रह्मणि | ब्रह्मणोः | ब्रह्मसु |

In this way the forms of the following nouns are framed.

### Words

वर्मन् = Armour
शर्मन् = Surname
कर्मन् = Work
वेश्मन् = House
वर्त्मन् = Way

सद्मन् = House
पर्वन् = Festival, bone-joint.
भस्मन् = Ashes
जन्मन् = Birth
लक्ष्मन् = Signs

### वाक्यानि

१ त्वया अद्य किं कर्म कृतम्– What work did you do to-day ?

२ जन्मना शूद्रः भवति संस्कारैः द्विज उच्यते– One is shudra by birth, but becomes Brahmin by education.

३ नरः पुण्येन कर्मणा सद्गतिं प्राप्नोति– Man attains heaven by good actions.

Neuter noun ending in न्. "अहन्" ( day )

नकारान्तो नपुंसकलिंगो 'अहन्' शब्दः ।

| | | | |
|---|---|---|---|
| १ | अहः | अह्नी, अहनी | अहानि |
| सं० | हे अहः | हे अह्नी, अहनी | हे अहानि |
| २ | अहः | अह्नी, अहनी | अहानि |
| ३ | अह्ना | अहोभ्याम् | अहोभिः |
| ४ | अह्ने | अहोभ्याम् | अहोभ्यः |
| ५ | अह्नः | अहोभ्याम् | अहोभ्यः |
| ६ | अह्नः | अह्नोः | अह्नाम् |
| ७ | अह्नि, अहनि | अह्नोः | अहःसु |

## Sentences

१ अहनि अहनि मनुष्येण शोभनं कर्म एव कर्तव्यं- A man must do good deeds every day.

२ दशभिः अहोभिः अहं तत्र गमिष्यामि- I shall go there within ten days.

३ संवत्सरस्य कति अहानि भवन्ति ?- How many days are there in a year ?

४ त्रीणि शतानि षष्टि च अहानि संवत्सरस्य भवन्ति- There are three hundred and sixty days in a year.

## Note

Let the students frame the forms like these and construct sentences. Now after reading the following sentences with sandhis, let them try to split up the sandhis.

## Sentences

१ दशभिरहोभिरहं तत्र गमिष्यामि । २ गमिष्याम्यहं तत्राहोभिर्दशभिः । ३ अहमहोभिर्दशभिस्तत्र गमिष्यामि । ४ किमस्त्यादिकारण जगतः ? ५ त्वया किं कर्माद्य कृतम् ? ६ जन्मनः शूद्रो भवति परंतु संस्कारैर्द्विज उच्यते । ७ भवति शूद्रो जन्मना परंतु संस्कारैरुच्यते द्विजः ।

---

# Lesson 2

In this lesson easy Sanskrit versions of the verses given in the former book are given. Let the student study them well.

वैशम्पायन उवाच—

युधिष्ठिरस्तं तपसा दग्धकिल्बिषमासाद्य प्रीतो नाम संकीर्तयन् शिरसाऽभ्यवादयत् ।

ततः कृष्णा च भीमश्च सुतपस्विनौ यमौ च शिरोभिः राजर्षिं प्राप्य परिवार्योपतस्थिरे ।

तथैव पाण्डवानां पुरोहितो धर्मज्ञो धौम्यो यथान्यायं तं संशितव्रतमृषिमुपाक्रान्तः ।

स धर्मज्ञो मुनिर्दिव्येन चक्षुषा पाण्डोः पुत्रान् कुरुश्रेष्ठानन्वजानात् । आस्यतामिति चाब्रवीत् ।

महातपा भ्रातृभिः सहासीनं कुरूणामृषभं पार्थं पूजयित्वाऽनामयं पर्यपृच्छत् ।

हे पार्थ ! अनृते भावं न कुरुषे ? कच्चिद्धर्मे प्रवर्तसे ? ते च मातापित्रोर्वृत्तिः कच्चिन्न सीदति ?

कच्चित्ते सर्वे गुरवो वृद्धा वैद्याश्च पूजिताः ? हे पार्थ ! पापेषु कर्मसु कच्चिद्भावं न कुरुषे ?

हे कुरुश्रेष्ठ ! सुकृतं प्रतिकर्तुं दुष्कृतं हातुं च कच्चिद्यथान्यायं जानासि ? न विकत्थसे ?

त्वया यथार्हं मानिताः साधवः कच्चिन्नन्दन्ति ? वनेषु वसन्नपि धर्ममेवानुवर्तसे ?

हे पार्थ ! त्वदाचारैर्धौम्यः कच्चिन्न परितप्यते दानधर्मतपःशौचैरार्जवेन तितिक्षया त्वं वर्तसे किम् ?

हे पार्थ ! पितृपैतामहं वृत्तं कच्चिदनुवर्तसे ? हे पाण्डव ! राजर्षियातेन पथा कच्चिद्गच्छसि ?

स्वे स्वे कुले पुत्रे वा पुनः नतरि जाते पितृलोकस्थाः पितरः शोचन्ति च हसन्ति च किल ?

तस्य दुष्कृतेऽस्माभिः किं संप्राप्तव्यं भविष्यति ? अस्य च सुकृतेऽस्माभिः शोभनं किं प्राप्तव्यमिति ?

हे पार्थ ! पिता माता तथैवाग्निर्गुरुश्च पञ्चम आत्मैते यस्य पूजितास्तस्योभौ लोकौ जितौ ।

हे आर्य ! भगवान् धर्मनिश्चयं यथावन्माऽऽह एतन्मया यथाशक्ति यथान्यायं विधिवत्क्रियते ॥

Let the students practise this lesson well. In the previous books the verses with their meanings are formed. If those are already learnt and remembered there would be no difficulty in understanding the prose given above. This Lesson is also a test for the students to know if the previous lessons have been done well. Now we will show some compounds.

## Compounds

१ दग्धकिल्बिषः = दग्धं किल्बिषं येन– He who has burnt his sin.

२ धर्मज्ञः = धर्मं जानाति इति– Knower of duties.

३ यथान्यायं = न्यायं अनतिक्रम्य– Not transgressing justice.

४ संशितव्रतः = संशितं व्रतं यस्य– A man of austerity.

५ कुरुश्रेष्ठः = कुरुषु श्रेष्ठः– The best of the Kurus.

६ महातपाः = महत् तपः यस्य– A man of great austerity.

७ अनामयः = न विद्यते आमयः रोगः यस्य– Good health.

८ अनृतं = न ऋतं– untruth.

९ मातापितरौ = माता च पिता च – Parents.

१० त्वदाचारः = तव आचारः– Your conduct.

११ दानधर्मतपःशौचम् = दानं च धर्मः च तपः च शौचं च– Gift, Duty, Austerity and purity.

१२ पितृपैतामहं = पितृपितामहानां इदं– Pertaining to father and grand father.

१३ राजर्षियातः = राजर्षिभिः यातः– By which the kings, who were Rishis, went.

१४ पितृलोकस्थ = पितृलोके तिष्ठति– Those who live in the abode of elders.

Below you will find questions in Sanskrit and answers also in Sanskrit. The practice of these questions and answers will be very useful in improving the knowledge of Sanskrit.

प्रश्न- युधिष्ठिरः कस्मै शिरसा अभ्यवादयत् ?

उत्तर- दग्धकिल्बिषं ऋषिश्रेष्ठं युधिष्ठिरः शिरसा अभ्यवादयत् ।

प्रश्न- अनंतरं भीमादिभिः किं कृतम् ?

उत्तर- कृष्णा च भीमश्च यमौ च राजर्षि परिवार्य उपतस्थिरे ।

प्रश्न- स धर्मज्ञः मुनिः तान्कि अब्रवीत् ?

उत्तर- आस्यतां इति ।

प्रश्न- कस्य उभौ लोकौ जितौ ?

उत्तर- यस्य पिता माता तथैवाग्निर्गुरुश्च पंचम आत्मैते पूजिताः तस्य ।

---

# Lesson 3

The forms of the neuter noun नामन् ending in न् are as follows.

नकारान्तो नपुंसकलिंगो 'नामन्' शब्दः ।

| | | | |
|---|---|---|---|
| १ | नाम | नामनी, नाम्नी | नामानि |
| स० | हे नामन्, नाम | हे नामनी, नाम्नी | हे नामानि |
| २ | नाम | नामनी, नाम्नी | नामानि |
| ३ | नाम्ना | नामभ्याम् | नामभिः |
| ४ | नाम्ने | नामभ्याम् | नामभ्यः |
| ५ | नाम्नः | नामभ्याम् | नामभ्यः |
| ६ | नाम्नः | नाम्नोः | नाम्नाम् |
| ७ | नाम्नि, नामनि | नाम्नोः | नामसु |

In this way the forms of the following nouns are formed.

## Words

व्योमन् = The sky.
लोमन् = The hair.
हेमन् = The gold.
धामन् = Place, abode.
सामन् = The verse of the Samaveda.

## वाक्यानि

१ अग्नौ हेम्नः शुद्धिः भवति = Gold is purified in the fire.
२ व्योम्नि वायुः संचरति = Air travels in the sky.
३ स पण्डितः साम्नः गायने प्रवीणः = That pandit is an adept in singing Samaveda.
४ हेम्ना सह मौक्तिकं अपि देहि = Give pearls along with the gold.

( स ) षकारान्तो नपुंसकलिंगो 'धनुष् ( स् )' शब्दः ।

| | | | |
|---|---|---|---|
| १ | धनुः | धनुषी | धनूंषि |
| सं० | हे धनुः | हे धनुषी | हे धनूंषि |
| २ | धनुः | धनुषी | धनूंषि |
| ३ | धनुषा | धनुर्भ्याम् | धनुर्भिः |
| ४ | धनुषे | धनुर्भ्याम् | धनुर्भ्यः |
| ५ | धनुषः | धनुर्भ्याम् | धनुर्भ्यः |
| ६ | धनुषः | धनुषोः | धनुषाम् |
| ७ | धनुषि | धनुषोः | धनुष्षु, धनुःषु |

In this way the forms of the following words are framed. Let it be remembered here that there is resemblance in the forms of words in ष् or स् .

## Words

यजुस् = A mantra of Yajurveda
वपुस् = The body
जनुस् = Birth
चक्षुस् = The eye.
हविस् = Oblation in the fire.
आयुस् = Age.

१ चक्षुर्भ्यां प्राणिनः पश्यन्ति = Animals see with two eyes.
२ हविषा अग्निं वर्धय = Let the fire grow by oblations.
३ आयुषे वर्चसे बलाय च यतस्व = Try for long life, brilliance and strength.
४ यजुषां विज्ञानेन नरः कर्ममार्गस्य ज्ञाता भवति = By the mantra of Yajurveda man gains knowledge of work.

सकारान्तो नपुंसकलिंगः 'पयस्' शब्दः ।

| | | | |
|---|---|---|---|
| १ | पयः | पयसी | पयांसि |
| स० | हे पयः | हे पयसी | हे पयांसि |
| २ | पयः | पयसी | पयांसि |
| ३ | पयसा | पयोभ्याम् | पयोभिः |
| ४ | पयसे | पयोभ्याम् | पयोभ्यः |
| ५ | पयसः | पयोभ्याम् | पयोभ्यः |
| ६ | पयसः | पयसोः | पयसाम् |
| ७ | पयसि | पयसोः | पयस्सु, पयःसु |

Similarly are formed the forms of the following words.

## Words

वासस् = Cloth
यशस् = Fame
ओजस् = Strength of the body
मानस् = Mind
रक्षस् = A Demon
यादस् = Watery animal
छन्दस् = The Veda

शिरस् = The head
रहस् = Living alone, Privacy
अम्भस् = Water
चेतस् = Mind
एनस् = Sin
अंहस् = Sin
सदस् = a congregation, a committee.

## वाक्यानि ।

१ यशसा तेजसा च वर्धस्व = Become great by fame and brilliance.

२ तव शरीरस्य ओजः इदानीं कुत्र अस्ति ? = Where is the strength of your body ?

३ रक्षसां पतिः रावणः आसीत् = Ravana was the king of the Rakshasas.

४ यादांसि जलजन्तवः भवन्ति = Water-animals live in water.

५ ब्राह्मणेन छन्दसां अध्ययनं कर्तव्यम् = A Brahman should study the Vedas.

६ तौ रहसि किमपि वदतः = They ( two ) are talking something in privacy.

७ सदसि सर्वे सभासदाः आगताः = All members have come in the committee.

८ जीर्णानि वासांसि विहाय नरः नवानि गृह्णाति = Man wears new clothes after chucking off old ones.

९ यथा प्रणवः छंदसां आद्यः अस्ति, तथैव दिलीपः नृपः महीक्षितां आद्यः आसीत् = Just as Pranava is the beginning of the vedas, so also king Dilip was the first of the kings.

१० नरः कायेन, वाचा, मनसा, इन्द्रियः वा यद्यत् करोति तत् तत् सकलं नारायणाय समर्पयेत् = Whatever a man does through his body, speech, mind or senses, he must attribute to Shri Narayana.

# Lesson 4

## Ramayana

१ दशरथः सबाष्पं अतिनिःश्वस्य पुनः सुमन्त्रं आह— हे सूत ! चतुर्विधबला चमूः क्षिप्रं प्रतिविधीयतां रामस्य अनुयात्रार्थं इति। २ तत् श्रुत्वा रामः उवाच-त्यक्तभोगसंगस्य वने वन्येन जीवतः मे किं कार्यं अनुयात्रेण ? चीराणि एव अनुयान्तु मे। खनित्रं समानयत, गच्छत इति। ३ निर्लज्जा कैकेयी स्वयं चीराणि आहृत्य रामं परिधत्स्व इति प्रोवाच। सः अपि, अव-क्षिप्य सूक्ष्मवस्त्रं मुनिवस्त्राणि अधारयत्। तथा च लक्ष्मणः। सीता कौशेयवासिनी लज्जिता तस्थौ। ततः एकं चीरं आदाय पाणिना कंठे कृत्वा धर्मज्ञा भर्तारं अपृच्छत्। कथं नु बध्नामि चीरं इति। ४ रामं स्वयं सीतायाः चीरं बध्नन्तं प्रेक्ष्य अन्तःपुर-चराः नार्यः नेत्रजं वारि मुमुचुः। ऊचुश्च रामम्। इयं कल्याणी सीता तापसवत् वने वस्तुं नार्हति। पुत्र ! नः याचनां शृणु। तिष्ठतु अत्रैव सीता। वसिष्ठः सीतां निवार्य कैकेयीं अब्रवीत्। ५ न गन्तव्यं वने देव्या सीतया। सर्वेषां दारसंग्रहवर्तिनां आत्मा हि दाराः। अतः इयं रामस्य आत्मा सीता अत्र मेदिनीं पाल-यिष्यति। अथ च यदि वैदेही वनं यास्यति, वयं अपि तां अनु-यास्यामः। ततः त्वं एका दुर्वृत्ता शाधि शून्यां वसुधाम्। न तत् भविता राष्ट्रं यत्र रामः भूपतिः न। वनं एव राष्ट्रं भविता यत्र रामः निवत्स्यति। अतः व्यपनीय चीरं स्नुषायै उत्तमानि आभर-णानि वस्त्राणि च देहि। ६ राजा दशरथः कैकेयीं अब्रवीत्— सत्यं वसिष्ठः गुरुः आह। हे अधमे ! वैदेह्याः कः अपराधः त्वया दृष्टः। एवं ब्रुवन्तं पितरं रामः अब्रवीत्। सिद्धः अस्मि वनवासाय इति। ७ मुनिवेषधरं रामं समीक्ष्य सह भार्याभिः राजा विगतचेतनः बभूव। मुहूर्तात् तु संज्ञां प्रतिलभ्य सुमन्त्रं अब्रवीत्— त्वं हयोत्तमैः

रथं संयोज्य आयाहि । प्रापय महाभागं रामं इतः जनपदात् परम् । ८ राज्ञः वचनं आदाय सुमन्त्रः शीघ्रं रथं योजयित्वा तत्र आगतः । सीतारामलक्ष्मणाः राजानं प्रदक्षिणीचक्रुः । रामः जननीं च अभ्यवादयत् । लक्ष्मणः सुमित्रायाः चरणौ जग्राह ।

---

1. Dasharatha said with tears and heaving a sigh– " O charioteer, make arrangements for an army soon consisting of the four kinds of strength to follow Rama." 2. Rama hearing that said– " What have I got to do with the followers, having given up all connections with enjoyment and living in the forest on forest-produce. Let only clothes of bark come with me. Therefore go and fetch a spade. 3. The shameless Kaikayee personally brought the clothes of bark and said to Rama– " Wear these." He having discarded thin clothes, wore those that the ascetics wear. So did Lakshmana. Sita having worn silk clothes stood ashamed. Then taking one bark cloth in hand and putting it on her neck she, the knower of duties, asked her husband– How have I to wear the bark-cloth ?

4. Seeing Rama, personally tying the bark cloth on ( the body of ) Sita all the ladies of the interior of the palace shed tears and said to Rama– " This good Sita is not fit to be in the forest like ascetics. Hear our prayers; son, let Sita remain here alone.

5. But Vasishtha, deterring Sita said to Kaikeyee– " Goddess-like Sita should not go to the forest. Wives are the souls of all people, who are married. Therefore Sita,

the soul of Rama will protect the earth remaining here. If Vaidehi goes to the forest, we shall also follow her. Then you, of bad conduct, being alone rule over the empty kingdom. That will not be a kingdom where there is no Rama. The forest only will become a kingdom where Rama dwells. So give up this bark cloth and give your daughter-in-law the best cloths and ornaments.

6. The king Dasharatha said to Kaikeyee 'Guru Vasishtha has said the trath. O bad woman, what sin did you see in Vaidehi ?' Rama said to his father who was saying so, "I am ready to go to the forest."

7. Seeing Rama in robe of an ascetic, the king along with his wives became senseless. After a while, however, coming back to his senses he said to Sumantra, 'Harness the best of the horses to the chariot and bring it and take this great man Rama beyond the kingdom.

8. Taking the order of the king, Snmantra quickly harnessning ( the horses in ) the chariot came there. Sita, Rama and Lakshmana went round the king, Rama bowed down the mother also. Lakshmana grasped the feet of Sumitra.

## Note

Now sentences with Sandhis are given below. In these sentences the students will see that even if the words are placed to and fro and sandhis made and though the forms ( of sentences ) are different by the new method, yet the meaning is the same.

## Sentences with Sandhis

१ सिद्धोऽस्मि वनवासायेति । सिद्धो वनवासायास्मीति । २ ब्रुवंतमेवं पितरं रामोऽब्रवीत् । रामो ब्रुवन्तमेवं पितरमब्रवीत् । ३ रामो जननीं चाभ्यवादयत् । रामोऽभ्यवादयज्जननीं च । रामो जननीमभ्यावदयच्च । ४ पुनः सुमन्त्रमाह दशरथः सबाष्पप्रतिनिःश्वस्य सबाष्पप्रतिनिःश्वस्य सुमन्त्रं पुनराह दशरथः । ५ चतुर्विधा चमूः क्षिप्रं प्रतिविधीयताम् रामस्यानुयात्रार्थम् । अनुयात्रार्थं रामस्य क्षिप्रं प्रतिविधीयतां चतुर्विधा चमूः । ६ त्यक्तभोगसंगस्य वने वन्येन जीवतो मे किं कार्यमनुयात्रेण ? अनुयात्रेण किं मे कार्यं वन्येन वने जीवतस्त्यक्तभोगसंगस्य ? ७ निर्लज्जा कैकेयी स्वयं चीराणि आहृत्य रामं परिधत्स्व इति प्रोवाच । कैकेयी निर्लज्जा प्रोवाच रामं परिधत्स्वेति स्वयमाहृत्य चीराणि ।

---

# Lesson 5

Now in this lesson we show the forms of some numeral adjectives.

Masculine numeral adjectives:

पु. बहु. त्रि Three and चतुर् ( Four )

| | | |
|---|---|---|
| १ | त्रयः | चत्वारः |
| स० | हे त्रयः | हे चत्वारः |
| २ | त्रीन् | चतुरः |
| ३ | त्रिभिः | चतुर्भिः |
| ४ | त्रिभ्यः | चतुर्भ्यः |
| ५ | त्रिभ्यः | चतुर्भ्यः |
| ६ | त्रयाणाम् | चतुर्णाम् |
| ७ | त्रिषु | चतुर्षु |

## Note

The meanings of these words are respectively 'Three' and 'Four', so there is no singular, and dual number for these. The plural forms are framed.

## Sentences

१ चत्वारः मनुष्याः तत्र गताः = Four men went there.

२ चतुर्णां विप्राणां एष आश्रमः = This hermitage is of four Brahmanas.

३ चतुर्भिः अश्वैः एषः रथः अत्र आनीयते = This chariot is brought here by four horses.

Now see the feminine forms of these words.

| | | |
|---|---|---|
| १ | तिस्रः | चतस्रः |
| स० | हे तिस्रः | हे चतस्रः |
| २ | तिस्रः | चतस्रः |
| ३ | तिसृभिः | चतसृभिः |
| ४ | तिसृभ्यः | चतसृभ्यः |
| ५ | तिसृभ्यः | चतसृभ्यः |
| ६ | तिसृणाम् | चतसृणाम् |
| ७ | तिसृषु | चतसृषु |

## वाक्यानि ।

१ चतसृषु पाठशालासु विद्यार्थिनः पठन्ति = Students are studying in the four schools.

२ चतस्रः स्त्रियः तत्र अधुना सन्ति = Four women are there.

३ चतसृभिः कुमारिकाभिः पुष्पमाला निर्मीयते = Garlands of flowers are made by four girls.

४ चतसृभ्यः देवताभ्यः अर्घ्यं यच्छ = Give worshipping things for the four goddesses.

५ चतसृणां युवतीनां एष गमनमार्गः = This is the way for the four women to go.

Now see the forms of the same words in neuter gender.

| | | |
|---|---|---|
| १ | त्रीणि | चत्वारि |
| स० | हे त्रीणि | हे चत्वारि |
| २ | त्रीणि | चत्वारि |
| ३ | त्रीभिः | चतुर्भिः |
| ४ | त्रिभ्यः | चतुर्भ्यः |
| ५ | त्रिभ्यः | चतुर्भ्यः |
| ६ | त्रयाणाम् | चतुर्णाम् |
| ७ | त्रिषु | चतुर्षु |

## वाक्यानि ।

मम चत्वारि मित्राणि सन्ति = I have four friends.

## Note

These are the forms of the word चतुर् in the three genders. Masculine forms with masculine nouns and the other forms with other gender nouns are to be used. Students should experience this in this lesson and practise constructing sentences.

Now see the forms of the numeral adjective पंचन्. This word has the same forms in all the genders.

| | |
|---|---|
| १ | पञ्च |
| स० | हे पञ्च |
| २ | पञ्च |
| ३ | पञ्चभिः |

+

| | |
|---|---|
| ४ | पञ्चभ्यः |
| ५ | पञ्चभ्यः |
| ६ | पञ्चानाम् |
| ७ | पञ्चसु |

In this way forms of the numerical adjectives नवन् ( Nine ), दशन् ( Ten ) are formed. The forms are alike in the three genders.

### वाक्यानि ।

१ पञ्च पुरुषाः अत्र आगताः = Five men have come here.
२ पञ्च स्त्रियः तत्र न गताः = Five women did not go there.
३ पञ्च फलानि मया भक्षितानि = I have eaten five fruits.
४ नव फलानि स कुत्र नयति ? = Where does he take nine fruits. ?

Now see the forms of the word अष्टन् ( eight )

| | | |
|---|---|---|
| १ | अष्ट | अष्टौ |
| स० | हे अष्ट | हे अष्टौ |
| २ | अष्ट | अष्टौ |
| ३ | अष्टभिः | अष्टाभिः |
| ४ | अष्टभ्यः | अष्टाभ्यः |
| ५ | अष्टभ्यः | अष्टाभ्यः |
| ६ | अष्टानाम् | अष्टानाम् |
| ७ | अष्टसु | अष्टासु |

In many cases there are two forms of this word, which are shown above. This word also is alike in all the three genders.

## वाक्यानि ।

१ अष्टौ बालकाः अत्र क्रीडन्ति = Eight boys play here.

२ अष्टानां कुमारिकाणां अद्य गानं भवति = There will be the music of the eight girls today.

३ अष्टसु पुस्तकेषु एषः श्लोकः दृश्यते = This verse is found in eight books.

# Lesson 6

## संस्कृत–वाक्यानि ।

### रामायणम्

१ ततः सीता हृष्टा रथं आरुरोह । भर्तारं अनुगच्छन्त्यै सीतायै वासांसि आभरणानि च संख्याय श्वशुरः दशरथः ददौ । भ्रातृभ्यां रामलक्ष्मणाभ्यां च आयुधानि कवचानि च ददौ । सर्वान् तान् आरूढान् दृष्ट्वा सुमंत्रः वायुवेगेन रथस्य अश्वान् अचोदयत् ।

---

1 Then pleased Sita got into the chariot. The father-in-law Dasharatha gave Sita, who was accompanying her husband, clothes and ornaments, counting. Gave arms and armours for the brothers Rama and Lakshamana. When Sumantra saw that all got into the chariot; he drove the horses thereof in the air-speed.

२ सबालवृद्धा सा अयोध्या पुरी एतेन परितप्ता । सर्वे जनाः रामं एव अभिदुद्रुवुः । सर्वे जनाः बाष्पपूर्णमुखाः पार्श्वतः पृष्ठतः च तस्थुः सुमन्त्रं ऊचुः च । वाजिनां रश्मीन् संयच्छ । शनैः याहि । द्रक्ष्याम रामस्य मुखम् ।

३ आयसं नूनं हृदयं असंशयं राममातुः, यतः रामे वनं याते न भिद्यते । कृतकृत्या हि वैदेही । अनुगता रामं छाया इव पतिं । अहो लक्ष्मण ! सिद्धार्थः त्वं । यत् परिचरिष्यसि भ्रातरं रामम् । एवं वदन्तः आगतं बाष्पं सोढुं न शेकुः ।

४ राजा अपि स्त्रीभिः वृतः गृहात् बहिः आगतः अब्रवीत् च द्रक्ष्यामि पुत्रं इति । रामः सूतं वदति 'याहि' इति । जनः वदति

---

2 The city of Ayodhya including boys and oldmen was struck with sorrow on account of this. All men ran towards Rama only. All men with faces full of tears, stood on the sides and in the front and said to Sumantra. "Tighten the reins of the horses, go slow, let us see the face of Rama."

3 The heart of Rama's mother, really and without doubt, is of iron because (even) when Rama goes to the forest, it does not break. Vaidehi is fortunate as she has her wishes fulfilled, because she has followed her husband like a shadow. "O Lakshamana, you are also fortunate, as your aims are fulfilled in serving your brother" Saying so, they could not control their tears.

4 The king also, surrounded by his wives, came out of his palace and said. "I shall see my son". Rama says to the driver– "Go" people say– "stop", the

'तिष्ठ' इति । सूतः उभयं कर्तुं न अशकत् । नृपतिः तु रामं गतं दृष्ट्वा दुःखेन भूमौ निपपात ।

५ गते रामे सर्वे रुरुदुः । अमात्याः तु तदा तथा रुदन्तीं कौसल्यां दशरथं च तथाविधं दृष्ट्वा उचुः । न एनं अनुव्रजेत् दूरं यं पुनः इच्छेत् शीघ्रं आयान्तं इति । निशम्य तद्वचः राजा सभार्यः व्यवस्थितः सुतं ईक्षमाणः । यावत् तु रजोरूपं अदृश्यत नैव तावत् आत्मचक्षुषी संजहार ।

६ यदा तु भूमिपः रामस्य रजः अपि न अपश्यत्, तदा विषण्णः भूत्वा धरणीतले पपात । अथ मूर्च्छितं नराधिपं समुत्थाप्य शोककर्शिता कौसल्या दशरथं सान्त्वयामास । वसुधाधिपः सगद्गदं उवाच– राममातुः कौसल्याया गृहं मां नयन्तु । नान्यत्र भविष्यति हृदयस्य आरामः ।

---

driver could not do both. But the king seeing that Rama had gone, fell down with sorrow.

5 When Rama had gone, all began to cry. The Ministers seeing the crying Kaushalya and Dasharatha in the same condition said– "One should not accompany any one, Whom one wants to come back soon, for a long distance." Hearing these words the king with his wives stood seeing his son. He did not take off his eyes till the dust vanished.

6 When the king did not see even the dust of the chariot, then becoming dejected, he fell on the ground. Afterwards, sorrowful Kausalya, raising fainted Dasharath tried to appease him. The king with faltering voice told that he should be taken to the house of Kausalya– Rama's mother. There would be no peace of my heart at any other place.

७ पुत्रद्वयविहीनं स्नुषया च वर्जितं भवनं नष्टचन्द्रं अंबरं इव राजा अमन्यत । अर्धरात्रे च एवं कौसल्यां अब्रवीत् । न पश्यामि त्वां । रामं एव अद्यापि मे दृष्टिः अनुगता । नैव सा निवर्तते इति बहु विललाप ।

८ रामः अपि रात्रिशेषेण महत् अन्तरं जगाम । नदीं उत्तीर्य दक्षिणां दिशं अभिमुखः प्रायात् । गोमतीं तीर्त्वा किंचिद् दूरं गत्वा दिव्यां गङ्गां ददर्श । शृंगवेरपुरं आसाद्य रामः सूतं अब्रवीत् । अयं अत्र महान् इंगुदीवृक्षः । इह एव अद्य वसामहे ।

---

7 The king thought that the house without his two sons and without the daughter-in-law was just like the sky without the moon. In the middle of night he said to Kausalya- ' I do not see you. My sight yet is after Rama. It is not coming back.' Saying this he began to cry verymuch.

8 Rama also went a long distance during the remaining night. After crossing the river, making his face towards the south he went away. After crossing Gomati, going some distance, he saw the divine river Ganga. After reaching Shringawer city he said to charioteer. Here is this big Ingudi tree. We will stay over here only.

### संधि ।

१ श्वशुरः दशरथः ददौ = श्वशुरो दशरथो ददौ ।
२ च आयुधानि = चायुधानि ।
३ सुमंत्रः वायुवेगेन = सुमन्त्रो वायुवेगेन ।
४ अयोध्यापुरी पतेन = अयोध्यापूर्यंतेन ।

| | |
|---|---|
| ५ सर्वे जनाः रामं एव | = सर्वे जना राममेव । |
| ६ सुमन्त्रं उचुः च | = सुमन्त्रमूचुश्च । |
| ७ शनैः याहि | = शनैर्याहि । |
| ८ राममातुः यतः वने | = राममातुर्यतो वने । |
| ९ सिद्धार्थः त्वं | = सिद्धार्थस्त्वं । |
| १० स्त्रीभिः वृतः | = स्त्रीभिर्वृतः । |
| ११ गृहात् बहिः आगतः | = गृहाद्बहिरागतः । |
| १२ अमात्याः तु तदा | = अमात्यास्तु तदा । |
| १३ भूमिपः रामस्य | = भूमिपो रामस्य । |

# Lesson 7

## Pronoun— अस्मत्

| | | | |
|---|---|---|---|
| १ | अहम् | आवाम् | वयम् |
| २ | माम्, मा | आवाम्, नौ | अस्मान्, नः |
| ३ | मया | आवाभ्याम् | अस्माभिः |
| ४ | मह्यम्, मे | आवाभ्याम, नौ | अस्मभ्यम्, नः |
| ५ | मत् | आवाभ्याम् | अस्मत् |
| ६ | मम, मे | आवयोः, नौ | अस्माकम्, नः |
| ७ | मयि | आवयोः | अस्मासु |

The meaning of the word अस्मत् is "I". The forms of this in all the seven cases are as above. Let the students use these.

## वाक्यानि

१ अहं पठामिः आवां पठाव, वयं पठामः = I read, we ( two ) read, we ( all ) read.

२ स मह्यं फलं ददाति = He gives me a fruit.

३ स आवाभ्यां पुष्पाणि न ददाति = He does not give ( two ) us flowers.

४ अस्मभ्यं जलं देहि = Give ( more than two ) us water.

५ एतत् अस्माकं नगरं = This is our city.

६ अस्माभिः किं इदानीं कर्तव्यम् ? = What should we do now?

Let the students use the forms like this. Now the word युष्मत् ( pronoun ) meaning "you" is shown in diffrent cases. The forms are alike in all the three genders.

| | | | |
|---|---|---|---|
| १ | त्वम् | युवाम् | यूयम् |
| २ | त्वाम्, त्वा | युवाम्, वाम् | युष्मान्, वः |
| ३ | त्वया | युवाभ्याम्, | युष्माभिः |
| ४ | तुभ्यम्, ते | युवाभ्याम्, वाम् | युष्मभ्यम्, वः |
| ५ | त्वत् | युवाभ्याम् | युष्मत् |
| ६ | तव, ते | युवयोः, वाम् | युष्माकम्, वः |
| ७ | त्वयि | युवयोः | युष्मासु |

Let the students remember that there are two forms of this word in each of the cases, objective, Dative and possessive. Now see their uses.

## वाक्यानि

१ त्वं अत्र आगच्छ, युवां कुत्र गच्छथः यूयं अत्र न आगच्छथ = You come here, where are you ( two ) going, you ( more than two ) donot come here.

२ युष्माभिः किमर्थं एतत्पुस्तकं न पठितम् ? = Why did you ( more that two ) not read this book ?

३ युष्माकं आश्रमेषु श्वानः न सन्ति = There is no dog in your ( in plural ) hermitages.

४ त्वया अत्र न आगन्तव्यम् = You should not come here. ( you is in singular number. )

Now see the forms of the word ( pronoun ) तद् meaning " He "

| | | | |
|---|---|---|---|
| १ | सः | तौ | ते |
| २ | तम् | तौ | तान् |
| ३ | तेन | ताभ्याम् | तैः |
| ४ | तस्मै | ताभ्याम् | तेभ्यः |
| ५ | तस्मात् | ताभ्याम् | तेभ्यः |
| ६ | तस्य | तयोः | तेषाम् |
| ७ | तस्मिन् | तयोः | तेषु |

वाक्यानि ।

१ सः गच्छति, तौ गच्छतः ते गच्छन्ति = He goes, they ( two ) go, they ( more than two ) go.

२ तैः पुस्तकस्य पठनं कृतम् = They did the reading of the book.

३ तेषां मनसि इदानीं किं वर्तते ? = What is there in their minds now ?

४ तस्मिन् त्वयि किं वीर्यं अस्ति ? = What is the valour that is in you ? ( singular )

५ ताभ्यां हि इदं सर्वं व्याप्तम् = All this is pervaded by these ( two ).

The forms of the word तद् in the feminine gender are as follows.

| | | | |
|---|---|---|---|
| १ | सा | ते | ताः |
| २ | ताम् | ते | ताः |
| ३ | तया | ताभ्याम् | ताभिः |
| ४ | तस्यै | ताभ्याम् | ताभ्यः |
| ५ | तस्याः | ताभ्याम् | ताभ्यः |
| ६ | तस्याः | तयोः | तासाम् |
| ७ | तस्याम् | तयोः | तासु |

Let the students compare and see what difference is there between feminine and masculine genders.

## वाक्यानि ।

१ सा युवती किं करोति ? = What does that woman do ?
२ ते कुमारिके किं कुरुतः ? = What those ( two ) girls do ?
३ ताः स्त्रियः किं पठन्ति ? = What do those ( more than two ) women read ?
४ तासु स्त्रीषु धैर्यं भवति = There is boldness in those women.
५ तासां नारीणां नामानि कथय = Give out the names of those women.
६ ताभिः एषः मार्गः दर्शितः = They showed this way.
७ तयोः रूपं वर्णनीयं अस्ति = Their form is praiseworthy.

This word तद् has its forms in neuter as follow.

| | | | |
|---|---|---|---|
| १ | तत् | ते | तानि |
| २ | तत् | ते | तानि |
| ३ | तेन | ताभ्याम् | तैः |

| | | | |
|---|---|---|---|
| ४ | तस्मै | ताभ्याम् | तेभ्यः |
| ५ | तस्मात् | ताभ्याम् | तेभ्यः |
| ६ | तस्य | तयोः | तेषाम् |
| ७ | तस्मिन् | तयोः | तेषु |

## Note

If the students observe keenly, they will know that the forms from and after the instrumental case are like those in masculine. There is peculiarity in the nominative and objective cases only.

## वाक्यानि ।

१ तत् फलं पक्कं अस्ति = That fruit is ripe.

२ ते फले पक्के स्तः = Those ( two ) fruits are ripe.

३ तानि फलानि पक्कानि सन्ति = Those fruits are ripe.

४ तस्मात् स्थानात् अहं इदानीं एव अत्र आगतः = I have come just now from that place.

५ तस्मात् नगरात् रामचन्द्रः अद्य वनं गतः = From that city Ramachandra went to the forest to day.

६ संस्कृतभाषा-प्रचारकः नगरात् नगरं गच्छति = The man who spreads the Sanskrit anguage goes from one city to another.

# Lesson 8

In the previous two lnssons we haven give the story of Ramayana. Now we give its easy Sanskrit sentences with sandhis.

## रामायणम् ।

### ( १ )

दशरथः सबाष्पमतिनिःश्वस्य पुनः सुमंत्रमाह– हे सूत ! चतुर्विधबला चमूः क्षिप्रं प्रतिविधीयतां रामस्यानुयात्रार्थमिति ।

तच्छ्रुत्वा राम उवाच– त्यक्तभोगसंगस्य वने वन्येन जीवतो मे किं कार्यमनुयात्रेण ? चीराण्येवानुयान्तु मे । खनित्रं समानयत गच्छतेति ।

निर्लज्जा कैकेयी स्वयं चीराण्याहृत्य रामं परिधत्स्वेति प्रोवाच । सोऽप्यवक्षिप्य सूक्ष्मवस्त्रं मुनिवस्त्राण्यधारयत् । तथा च लक्ष्मणः । सीता कौशेयवासिनी लज्जिता तस्थौ । ततः एकं चीरमादाय पाणिना कंठे कृत्वा धर्मज्ञा भर्तारमपृच्छत् । कथं नु बध्नामि चीरमिति ।

रामं स्वयं सीतायाश्चीरं बध्नन्तं प्रेक्ष्यान्तःपुरचराः नार्यो नेत्रजं वारि मुमुचुः । ऊचुश्च रामम्– इयं कल्याणी सीता तापसवद्वने वस्तुं नार्हति ।

पुत्र ! नो याचनां शृणु । तिष्ठत्वत्रैव सीता । सबाष्पस्तु गुरुर्वसिष्ठः सीतां निवार्य कैकेयीमब्रवीत् ।

न गन्तव्यं वने देव्या सीतया । सर्वेषां दारसंग्रहवर्तिनामात्मा हि दाराः । अत इयं रामस्यात्मा सीताऽत्र मेदिनीं पालयिष्यति । अथ च यदि वैदेहि वनं यास्यति, वयमपि तामनुयास्यामः । ततस्त्वमेका दुर्वृत्ता शाधि शून्यां वसुधाम् । न तद्भविता राष्ट्रं यत्र रामो भूपतिर्न । वनमेव राष्ट्रं भविता यत्र रामो निवत्स्यति । अतो व्यपनीय चीरं स्नुषायाः उत्तमान्याभरणानि वस्त्राणि च देहि ।

राजा दशरथः कैकेयीमब्रवीत्– सत्यं वसिष्ठो गुरुराह । हे अधमे ! वैदेह्याः कोऽपराधस्त्वया दृष्टः ? एवं ब्रुवन्तं पितरं रामोऽब्रवीत् । सिद्धोऽस्मि वनवासायेति ।

मुनिवेषधरं रामं समीक्ष्य सह भार्याभिः राजा विगतचेतनो बभूव । मुहूर्तात्तु संज्ञां प्रतिलभ्य सुमन्त्रमब्रवीत् । त्वं हयोत्तमैः रथं योजयित्वायाहि । प्रापय महाभागं राममितो जनपदात्परम् ।

राज्ञो वचनमादाय सुमंत्रः शीघ्रं रथं योजयित्वा तत्रागतः । सीतारामलक्ष्मणा राजानं प्रदक्षिणीचक्रुः । रामो जननीं चाभ्यवादयत् । लक्ष्मणः सुमित्रायाश्चरणौ जग्राह ।

ततः सीता हृष्टा रथमारुरोह । भर्तारमनुगच्छन्त्यै सीतायै वासांस्याभरणानि च संख्याय श्वशुरो दशरथो ददौ । भ्रातृभ्यां रामलक्ष्मणाभ्यां चायुधानि कवचानि च ददौ । सर्वांस्तानारूढान्दृष्ट्वा सुमन्त्रो वायुवेगेन रथास्याश्वानचोदयत् ।

सबालवृद्धा साऽयोध्यापुर्येतेन परितप्ता । सर्वे जना राममेवाभिदुद्रुवुः । सर्वे जना बाष्पपूर्णमुखाः पार्श्वतः पृष्ठतश्च तस्थुः सुमन्त्रमूचुश्च । वाजिनां रश्मीन्संयच्छ शनैर्याहि । द्रक्ष्याम रामस्य मुखम् ।

आयसं नूनं हृदयमसंशयं राममातुर्यतो रामे वनं याते न भिद्यते । कृतकृत्या हि वैदेही । अनुगता रामं छायेव पतिम् । अहो लक्ष्मण ! सिद्धार्थस्त्वम् । यत्परिचरिष्यसि भ्रातरं रामम् । एवं वदन्त आगतं बाष्पं सोढुं न शेकुः ।

राजाऽपि स्त्रीभिर्वृतो गृहाद्बहिरागतोऽब्रवीच्च द्रक्ष्यामि पुत्रमिति । रामः सूत वदति याहीति । जनो वदति तिष्ठेति । सूत उभयं कर्तुं नाऽशकत् । नृपतिस्तु रामं गतं दृष्ट्वा दुःखेन भूमौ निपपात ।

गते रामे सर्वे रुरुदुः । अमात्यास्तु तदा तथा रुदन्तीं कौसल्यां दशरथं च तथाविधं दृष्ट्वोचुः । नैनमनुव्रजेद् दूरं यं पुनरिच्छेच्छी-

